# ॥ श्रीमच्छङ्करभगवत्पादाचार्य-पूजा-पद्धतिः ॥

## कलिसम्वत् ५१२५ / विक्रमी-संवत्सरः २०८१ / शाङ्कर-संवत्सरः २५३१

[12-05-2024, Sunday]



*विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया।*
*यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये॥*
*ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने। व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः॥*
*शङ्करं शङ्कराचार्यं केशवं बादरायणम्। सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः॥*
*श्रुतिस्मृतिपुराणानामालयं करुणालयम्। नमामि भगवत्पादं शङ्करं लोकशङ्करम्॥*
*शिष्यैश्चतुर्भिर्गोविन्दश्चतुर्भिरिव बाहुभिः। विराजते मुनिश्रेष्ठस्तस्मै श्रीगुरवे नमः॥*

### विघ्नेश्वर स्मरणम् –

**श्रीमन् महागणाधिपतये नमः।**

### शांकरमतावलम्बीनां गुरुपरम्परा –

**नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च।**
**व्यासं शुकं गौडपदं महानतं गोविन्दयोगीन्द्रमथास्य शिष्यम्॥**
**श्रीशंकराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम्।**
**तं तोटकं वार्तिककारमन्यानस्मद्गुरून् संततममानतोऽस्मि॥**

# ॥ पूजा-पद्धतिः ॥

**नारायण स्मरण कर मार्जन करें(जल छिडकें)** –

**अपवित्रः पवित्रो वा सर्वावस्थांगतोऽपि वा। यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः॥**

**जलशुद्धिः** – **वं** [8 वारम्] **पुष्पादि पूजासामग्रीशुद्धिः** – **हं** [8 वारम्]

**आसनविधिः** –

आसनमहामन्त्रस्य पृथिव्या मेरुपृष्ठः ऋषिः कूर्मो देवता सुतलं छंदः आसने विनियोगः॥

**पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम्॥**

**भूतोत्सारणम्** –

**अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः। ये भूता विघ्नकर्तारः ते नश्यन्तु शिवाज्ञया॥**

**अपक्रामन्तु भूतानि पिशाचास्सर्वतो दिशम्। सर्वेषामविरोधेन पूजाकर्म समारभे॥**

**पवित्री धारणम्** –

**पवित्रोस्थो वैष्णव्यौ सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः।**

**तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम्।**

**शिखाबन्धनम्** –

**चिद्रूपिणि महामाये दिव्यतेजः समन्विते। तिष्ठ देवि शिखामध्ये तेजोवृद्धिं कुरुष्व मे॥**

**आचमनम्** –

**केशवाय नमः। नारायणाय नमः। माधवाय नमः।** [आचम्य] **गोविन्दाय नमः।** [से दक्षिण हस्त धोवें]

**विघ्नेश पूजनम्** –

**नमो ब्रह्मण्यदेव्याय गोब्राह्मणहिताय च। जगद्धिताय कृष्णाय गोविन्दाय नमो नमः॥**

**गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुदेवो महेश्वरः। गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः॥**

**सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः। लम्बोदरश्च विकटो विघ्नराजो गणाधिपः॥**

**धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः। द्वादशैतानि नामानि यः पठेच्छृणुयादपि॥**

**विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा। सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते॥**
**अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरैरपि। सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः॥**
**आगमार्थं तु देवानां गमनार्थं तु रक्षसाम्। देवतापूजनार्थाय घण्टानादं करोम्यहम्॥** [इति घण्टानादं कृत्वा]
**शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्। प्रसन्नवदनं ध्यायेत् सर्वविघ्नोऽपशान्तये॥**

[प्राणानायम्य]

[अप उपस्पृश्य, पुष्पाक्षतान् ग्रहीत्वा]

**दक्षिणहस्तमें जल, अक्षत, पुष्प लेकर संकल्प करें** –

श्री विष्णुर्विष्णुर्विष्णुः, श्रीमद्भगवतोमहापुरुषस्यविष्णोराज्ञया प्रवर्तमानस्याद्य ब्रह्मणो द्वितीये परार्धे एकपञ्चाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे द्वात्रिंशत्कल्पानां मध्ये अष्टमे श्रीश्वेतवाराहकल्पे स्वायम्भुवादिमन्वतराणां मध्ये सप्तमे वैवस्वतमन्वन्तरे कृत-त्रेता-द्वापर-कलिसंज्ञानां चतुर्युगानां मध्ये वर्तमाने अष्टाविंशतितमे कलियुगे तत्प्रथमचरणे बौद्धावतारे भूर्लोके पञ्चाशत्कोटियोजनविस्तीर्ण-भूमण्डलान्तर्गतसप्तद्वीपमध्यवर्तिनि जम्बूद्वीपे तत्रापि श्रीगङ्गादिसरिद्भिः पाविते परम-पवित्रे भारतवर्षे भरतखण्डे आर्यावर्तान्तर्गतकाशी-कुरुक्षेत्र-पुष्कर-प्रयागादि-नाना-तीर्थयुक्त कर्मभूमौ मध्यरेखाया मध्ये ______ (पूर्व/पश्चिम/उत्तर/दक्षिण) दिग्भागे ______ क्षेत्रे श्रीगङ्गायमुनयोरमुकदिग्भागे ______ प्रदेशे ब्रह्मावर्तादि ______ दिग्भागावस्थिते ______ जनपदे तज्जनपदान्तर्गते ______ ग्रामे– श्रीमन्नृपतिवीरविक्रमादित्यसमयतो ______ संख्यापरिमिते प्रवर्तमानवत्सरे प्रभवादिषष्ठिसम्वत्सराणां मध्ये ______ नाम सम्वत्सरे उत्तरायणे, ग्रीष्मऋतौ, वैशाखमासे, शुक्लपक्षे, पञ्चम्यां शुभतिथौ, ______ वासर-युक्तयाम् ______ नक्षत्र युक्तायां एवं गुणविशेषणविशिष्टायाम् अस्यां पञ्चम्यां शुभतिथौ ममोपात्तसमस्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं–

- श्रीशङ्कराचार्य-प्रेरणया चतुर्विधपुरुषार्थ-सिद्धिद्वारा वैदिक-संस्कृति-विकासार्थं विश्वेस्मिन् जगति सर्वविध शांत्यर्थं धर्मग्लानि-अधर्माभ्युत्थाननिवृत्तिपूर्वकं धर्मसंस्थापनार्थं सनातन-धर्मेऽस्मिन् निरतिशयानन्द श्रद्धा-भक्ति सम्पत्यर्थं सनातन-धर्म प्रतिपादकानां साङ्गानां सरहस्यानां श्रृति-स्मृति-पुराणोपपुराणादीनां धार्मिकग्रन्थानां सर्वासां विद्यानां च अभिवृद्ध्यर्थं
- रोहिणीनक्षत्रे आविर्भूतानां श्रीमज्जगद्गुरु श्रीनिश्चलानन्दसरस्वतीवर्य: संयमींद्राणाम् अस्माकं जगद्गुरूणां दीर्घ आयुः आरोग्य-सिद्ध्यर्थं, संकल्पितानां सर्वेषां लोकक्षेमार्थकार्याणां वेदशास्त्रादिसंप्रदायपोषणकार्याणां राष्ट्रोत्कर्षेत्यादि यात्रायाश्च अविघ्नतया संपूर्त्यर्थं गोवर्द्धनमठ-गुरु-परंपरायां भक्जनानाम् अचंचल-भावशुद्ध-दृढतर-भक्ति-सिध्यर्थं, परस्पर-ऐकमत्य-सिद्ध्यर्थं

○ भारतीयानां महाजनानां विघ्न-निवृत्ति-पूर्वक-सत्कार्य-प्रवृत्ति-द्वारा ऐहिक- आमुष्मिक-अभ्युदय-प्राप्त्यर्थम्, असत्कार्येभ्यः निवृत्त्यर्थं भारतीयानां संततेः सनातन-संप्रदाये श्रद्धा-भक्त्योः अभिवृद्ध्यर्थं सर्वेषां द्विपदां चतुष्पदाम् अन्येषां च प्राणि-वर्गाणाम् आरोग्य-युक्त-सुख-जीवन-अवाप्त्यर्थम्

○ श्रीमच्छङ्करभगवत्पादाचार्यप्रीत्यर्थं श्रीशङ्कर-जयंती-महोत्सवे श्रीशङ्करभगवत्पाद प्रसाद सिद्ध्यर्थं श्रीशङ्कराचार्य चरणारविन्दयोः अचञ्चल निष्काम निष्कपट भक्तिसिद्ध्यर्थं यथाशक्ति ध्यानावाहनादि षोडशैरुपचारैः श्रीमच्छङ्करभगवत्पादाचार्य पूजां करिष्ये॥ तदङ्गत्वेन कलश-शंख-आत्म-पीठ पूजां च करिष्ये॥

## ॥ कलशार्चनम्॥

**श्रीकलशाय नमः। दिव्यगन्धान्धारयामि॥**

[कलशं गन्धाक्षत पत्र पुष्पैरभ्यर्च्य परिमलद्रव्याणि निक्षिप्य कलशं हस्तेनाच्छाद्य]

**कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः॥**
**कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा। ऋग्वेदोऽथयजुर्वेदः सामवेदोऽप्यथर्वणः॥**
**अङ्गैश्च सहिताः सर्वे कलशाम्बु समाश्रिताः। गायत्री चात्र सावित्री शान्तिः पुष्टिकरी तथा॥**
**गङ्गे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु॥**
**सर्वे समुद्राः सरितः तीर्थानि जलदा नदाः। आयान्तु गुरुपूजार्थं दुरितक्षयकारकाः॥**
**सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्राम्। करधृतकलशोद्यत्सोत्पलाभीत्यभीष्टाम्॥**
**विधिहरिहररूपां सेन्दुकोटीरचूडाम्। कलितसितदुकूलां जाह्नवीं तां नमामि॥**

[गायत्र्या दक्षिणामूर्तिमूलेन च दशवारमभिमन्त्र्य-कलशमुखे पुष्पाणि निक्षिप्य- कलशोदकेन आत्मानं सर्वोपकरणानि च प्रोक्षयेत्]

## ॥ शंखपूजा ॥

[कलशोदकेन भूर्भुवस्सुवरोऽमिति शंखं प्रक्षाळ्य-चक्रमुद्रां प्रदर्श्य-गायत्र्या दक्षिणामूर्तिमूलेन च शंखं कलशजलेनापूर्य- धेनुमुद्रां प्रदर्श्य- परिमलद्रव्याणि निक्षिप्य- गन्धाक्षतपत्रपुष्पैः समभ्यर्चयेत्]

**शंखमूले ब्रह्मणे नमः।**

**शंखमध्ये जनार्दनाय नमः।**

**शंखाग्रे चन्द्रशेखराय नमः॥**

[शंखं स्पृष्ट्वा]

**शंखं चन्द्रार्कदैवत्यं मध्ये वरुणसंयुतम्। पृष्ठे प्रजापतिश्चैव अग्रे गङ्गा सरस्वती॥**

**त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया। शंखे तिष्ठन्ति विप्रेन्द्राः तस्माच्छंखं प्रपूजयेत्॥**

**त्वं पुरा सागरोत्पन्नः विष्णुना विधृतः करे। पूजितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तुते॥**

**गर्भा देवारिनारीणां विशीर्यन्ते सहस्रधा। तव नादेन पाताले पाञ्चजन्य नमोऽस्तुते॥**

**दर्शनादेव शंखस्य किं पुनः स्पर्शनेन तु। विलयं यान्ति पापानि हिमवद्भास्करोदये॥**

**नत्वा शंखं करे स्पृष्ट्वा मन्त्रैरेतस्तु वैष्णवैः। यः स्नापयति गोविन्दं तस्य पुण्यमनन्तकम्॥**

**शंखमध्यस्थितं तोयं भ्रामितं केशवोपरि। अङ्गलग्नं मनुष्याणां ब्रह्महत्यायुतं दहेत्॥**

[शंखोदकेन किञ्चित् कलशे निक्षिप्य- देवस्यार्घ्यं दत्वा- शंखोदकेन पूजाद्रव्याणि आत्मानं च प्रोक्ष्य- शेषं विसृज्य- पुनः शंखमापूर्य- गन्धादिभिरभ्यर्च्य- देवस्य दक्षिणदिग्भागे स्थापयेत्]

## ॥ श्रीमहागणपति पूजा ॥

**आदौ निर्विघ्नता सिद्ध्यर्थं श्रीमहागणपतिपूजां करिष्ये॥**

**श्रीमहागणपतये नमः - ध्यायामि। ध्यानं समर्पयामि॥**

**श्रीमहागणपतये नमः - अवाहयामि।**

**श्रीमहागणपतये नमः - आसनं कल्पयामि।**

**श्रीमहागणपतये नमः - पादारविन्दयोः पाद्यं पाद्यं समर्पयामि।**

**श्रीमहागणपतये नमः - हस्तेषु अर्घ्यमर्घ्यं समर्पयामि।**

**श्रीमहागणपतये नमः - मुखारविन्दे आचमनीयमाचमनीयं समर्पयामि।**

**श्रीमहागणपतये नमः - मलापकर्षणस्नानं समर्पयामि।**

**श्रीमहागणपतये नमः - फलपञ्चामृतस्नानं समर्पयामि।**

**श्रीमहागणपतये नमः - शुद्धोदकस्नानं समर्पयामि।**

**श्रीमहागणपतये नमः – स्नानाङ्गमाचमनीयमाचमनीयं समर्पयामि।**

**श्रीमहागणपतये नमः - वस्त्रयुग्मं समर्पयामि।**

**श्रीमहागणपतये नमः - आचमनीयमाचमनीयं समर्पयामि।**

**श्रीमहागणपतये नमः - यज्ञोपवीतं समर्पयामि।**

श्रीमहागणपतये नमः - आचमनीयमाचमनीयं समर्पयामि।

श्रीमहागणपतये नमः - आभरणानि समर्पयामि।

श्रीमहागणपतये नमः - दिव्यगन्धान्धारयामि।

श्रीमहागणपतये नमः - अक्षतान् समर्पयामि।

## ॥ अथ नामपूजा ॥

श्री सुमुखाय नमः।

श्री एकदन्ताय नमः।

श्री कपिलाय नमः।

श्री गजकर्णकाय नमः।

श्री लम्बोदराय नमः।

श्री विकटाय नमः।

श्री विघ्नराजाय नमः।

श्री गणाधिपाय नमः।

श्री धूम्रकेतवे नमः।

श्री गणाध्यक्षाय नमः।

श्री भालचन्द्राय नमः।

श्री गजाननाय नमः।

श्रीमहागणपतये नमः - नानाविध परिमलपत्रपुष्पाणि समर्पयामि॥

श्रीमहागणपतये नमः - धूपमाघ्रापयामि।

श्रीमहागणपतये नमः - दीपं दर्शयामि।

श्रीमहागणपतये नमः - धूपदीपानन्तरं
आचमनीयमाचमनीयं समर्पयामि।

श्रीमहागणपतये नमः - अमृतनैवेद्यं समर्पयामि।

श्रीमहागणपतये नमः - ताम्बूलं समर्पयामि।

श्रीमहागणपतये नमः - दिव्यमङ्गलनीराजनं दर्शयामि।

शिवसुताय श्रीवरदमूर्तये नमो नमः॥

श्रीमहागणपतये नमः - मन्त्रपुष्पं समर्पयामि॥

श्रीमहागणपतये नमः - प्रदक्षिणनमस्कारान् समर्पयामि।

श्रीमहागणपतये नमः - प्रसन्नार्घ्यं समर्पयामि।

वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ। निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा॥

श्रीमहागणपतये नमः - प्रार्थयामि।

श्रीमहागणपतये नमः - समस्तोपचारपूजाः समर्पयामि।

अनया पूजया श्रीमहागणपतिः प्रीयताम्॥

## ॥ आत्मपूजा ॥

आत्मने नमः - दिव्यगन्धान् धारयामि॥

आत्मने नमः।

अन्तरात्मने नमः।

जीवात्मने नमः।

योगात्मने नमः।

परमात्मने नमः।

ज्ञानात्मने नमः - समस्तोपचारान् समर्पयामि॥

देहो देवालयः प्रोक्तः जीवो देवः सनातनः। त्यजेदज्ञाननिर्माल्यं सोऽहं भावेन पूजयेत्॥

आराधयामि मणिसन्निभमात्मलिङ्गं मायापुरीहृदयपङ्कजसन्निविष्टम् ।
श्रद्धानदीविमलचित्तजलाभिषेकैः नित्यं समाधिकुसुमैरपुनर्भवाय॥

## ॥ मण्टपध्यानम् ॥

उत्तप्तोज्ज्वलकाञ्चनेन रचितं तुङ्गाङ्गरङ्गस्थलम्। शुद्धस्फाटिकभित्तिकाविरचितैः स्तम्भैश्च हेमैश्शुभैः॥
द्वारैश्चामररत्नराजखचितैः वज्रैश्च सोपानकैः। नानारत्नविचित्रस्वर्णकलशैः ध्यायेन्महामण्टपम्॥

## ॥ द्वारदेवता पूजा ॥

श्री पूर्वद्वारे द्वारश्रियै नमः – श्री धात्रे नमः। श्री विधात्रे नमः॥

श्री दक्षिणद्वारे द्वारश्रियै नमः - श्री जयाय नमः। श्री विजयाय नमः॥

**श्री पश्चिमद्वारे द्वारश्रियै नमः - श्री चण्डाय नमः। श्री प्रचण्डाय नमः॥**

**श्री उत्तरद्वारे द्वारश्रियै नमः - श्री नन्दाय नमः। श्री सुनन्दाय नमः॥**

**श्री ऊर्ध्वद्वारे द्वारश्रियै नमः - श्री आकाशाय नमः। श्री अन्तरिक्षाय नमः॥**

**श्री अधोद्वारे द्वारश्रियै नमः - श्री भूम्यै नमः। श्री पातालाय नमः॥**

**श्री पूर्वे धर्माय नमः।**

**श्री दक्षिणे ज्ञानाय नमः।**

**श्री पश्चिमे वैराग्याय नमः।**

**श्री उत्तरे ऐश्वर्याय नमः॥**

## ॥ अष्टदिक्पाल पूजा ॥

**श्री इन्द्राय नमः।**

**श्री अग्नये नमः।**

**श्री यमाय नमः।**

**श्री निर्ऋतये नमः।**

**श्री वरुणाय नमः।**

**श्री वायवे नमः।**

**श्री कुबेराय नमः।**

**श्री ईशानाय नमः॥**

## ॥ पीठपूजा ॥

**श्री आधारशक्त्यै नमः।**

**श्री मूलप्रकृत्यै नमः।**

**श्री आदिकूर्माय नमः।**

**श्री वराहाय नमः।**

**श्री अनन्ताय नमः।**

**श्री अष्टदिग्गजेभ्यो नमः।**

श्री क्षीरार्णवाय नमः।

श्री श्वेतद्वीपाय नमः।

श्री कल्पवृक्षाय नमः।

श्री सुवर्णमण्टपाय नमः।

श्री सं सत्वाय नमः।

श्री रं रजसे नमः।

श्री तं तमसे नमः।

श्री वह्निमण्डलाय नमः।

श्री सूर्यमण्डलाय नमः।

श्री सोममण्डलाय नमः।

श्री ह्रीं ज्ञानात्मने नमः।

श्री चतुर्दशलोकेभ्यो नमः।

श्री सप्तसागरेभ्यो नमः।

श्री अङ्कुराय नमः।

श्री नाळाय नमः।

श्री पत्रेभ्यो नमः।

श्री केसरेभ्यो नमः।

श्री दलेभ्यो नमः॥

## ध्यानम् [भगवान् शंकराचार्य का ध्यान करें] –

यो धत्ते भुवनानि सप्त गुणवान् स्रष्टा रजःसंश्रयः, संहर्ता तमसान्वितो गुणवतीं मायामतीत्य स्थितः।
सत्यानन्दमनन्तबोधममलं ब्रह्मादिसंज्ञास्पदं, नित्यं सत्त्वसमन्वयादधिगतं पूर्णं शिवं धीमहि॥

कैलासाचलमध्यस्थं कामिताभीष्टदायकम्। ब्रह्मादिप्रार्थनाप्राप्त दिव्यमानुषविग्रहम्॥
भक्तानुग्रहणैकान्त शान्त स्वान्त समुज्ज्वलम्। सर्वज्ञं संयमीन्द्राणां सार्वभौमं जगद्गुरुम्॥
नमाम्यभोगिपरिवारसम्पदं निरस्तभूतिमनुमार्धविग्रहम्।
अनुग्रमुन्मृदितकाललाञ्छनं विनाविनायकमपूर्वशङ्करम्॥
किङ्करीभूतभक्तैनः पङ्कजातविशोषणम्। ध्यायामि शङ्कराचार्यं सर्वलोकैकशङ्करम्॥

**चिन्मुद्रां दक्षहस्ते प्रणतजनमहाबोधदात्रीं दधानम्। वामे नम्रेष्टदान प्रकटनचतुरं चिह्नमप्यादधानम्॥**
**कारुण्यापारवार्धिं यतिवरवपुषं शङ्करं शङ्करांशम्। चन्द्राहङ्कारहुङ्कृत् स्मितलसितमुखं भावयाम्यन्तरङ्गे॥**
**अस्मिन् बिंबमध्ये श्रीशङ्करभगवत्पादाचार्यस्वामिनं ध्यायामि॥**
**श्रीमच्छङ्करभगवत्पादाचार्येभ्यो नमः। ध्यानार्थे अक्षतपुष्पाणि समर्पयामि।** [अक्षत-पुष्प चढ़ाएँ]

## आवाहनम् [भगवान् शंकराचार्य का आह्वान करें] –



**सद्गुरो शङ्कराचार्य रूपान्तरितविग्रह। साक्षाच्छ्रीदक्षिणामूर्ते कृपयाऽऽवाहितो भव॥**
**अस्मिन् बिंबमध्ये श्रीशङ्करभगवत्पादाचार्यस्वामिनं आवाहयामि॥**
**इहागच्छ, इह तिष्ठ परमेश्वर। मत्कृता पूजां गृहाण।** [बोलकर आवाहनी मुद्रा दिखाएँ]

## आसनम् –

**आर्याम्बा गर्भसम्भूत मातृवात्सल्यभाजन। जगद्गुरुददाम्येतद्रत्नसिंहासनं शुभम्॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – रत्नसिंहासनं समर्पयामि॥**

## पाद्यम् –

**विद्याधिराजसत्पौत्र विद्याव्यासङ्गतत्पर। विश्वविख्यात वैदुष्य पाद्यमेतद्ददाम्यहम्॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – पादारविन्दयोः पाद्यं पाद्यं समर्पयामि॥**

## अर्घ्यम् –

**शिवगुर्वन्वयाम्बोधि शरत्पर्वनिशाकर। शिवावतार भगवन् गृहाणार्घ्यं नमोऽस्तुते॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – हस्तयोः अर्घ्यमर्घ्यं समर्पयामि॥**

## आचमनम् –

**दरिद्रब्राह्मणीसद्म स्वर्णामलकवर्षक। विस्मापकस्वात्मवृत्त ददाम्याचमनीयकम्॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – मुखारविन्दे आचमनीयमाचमनीयं समर्पयामि॥**

## मधुपर्कम् –

**जननीसमनुज्ञात सन्यासाश्रमसङ्ग्रह। गन्धर्वशापशमन मधुपर्कं ददामि ते॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – मधुपर्कं समर्पयामि॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – आचमनीयमाचमनीयं समर्पयामि॥**

**स्नानम्** –

**श्रुतिस्मृतिपुराणानाम् आलयं करुणालयम्। नमामि भगवत्पादशंकरं लोकशंकरम्॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – मलापकर्षणस्नानं समर्पयामि॥**

[दुग्ध स्नान]
**कामधेनोस्समुद्भूतं देवर्षिपितृतृप्तिदम्। पयो ददामि देवेश स्नानार्थं प्रतिगृह्यताम्॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – क्षीरस्नानं समर्पयामि॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[दधि स्नान]
**चन्द्रमण्डलसङ्काशं सर्वदेवप्रियं दधि। स्नानार्थं ते मया दत्तं प्रीत्यर्थं प्रतिगृह्यताम्॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – दधिस्नानं समर्पयामि॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[घृत स्नान]
**आज्यं सुराणामाहारः आज्यं यज्ञे प्रतिष्ठितम्। आज्यं पवित्रं परमं स्नानार्थं प्रतिगृह्यताम्॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – आज्यस्नानं समर्पयामि॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[मधु स्नान]
**सर्वौषधिसमुत्पन्नं पीयूषसदृशं मधु। स्नानार्थं ते प्रयच्छामि गृहाण परमेश्वर॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – मधुस्नानं समर्पयामि॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[शर्करा स्नान]

**इक्षुदण्डसमुद्भूत दिव्यशर्करया गुरुम्। स्नपयामि सदा भक्त्या प्रीतो भव महेश्वर॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शर्करास्नानं समर्पयामि॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[नारिकेळ फलोदकस्नान (नारियल जलसे)]

**फलेन फलितं सर्वं त्रैलोक्यं सचराचरम्। तस्मादस्याभिषेकेण सफलास्युर्मनोरथाः॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – नारिकेळ फलोदकस्नानं समर्पयामि॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[शुद्ध जल से]

**गोविन्दभगवत्पाद पादसेवाधुरन्धर। महावाक्योपदेशाढ्य स्नाहि पञ्चामृतद्रवैः॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – फलपञ्चामृतस्नानं समर्पयामि॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[ओषधि स्नान]

**सर्वतंत्रस्वतंत्राय सदात्माद्वैतरूपिणे । श्रीमते शंकरार्याय वेदांतगुरवे नमः ॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – ओषधिस्नानं समर्पयामि॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[गन्धोदक स्नान]

**यमाश्रिता गिरां देवी नंदयत्यात्मसंश्रितान्। तमाश्रये श्रिया जुष्टं शंकरं करुणानिधिम् ॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – गन्धोदकस्नानं समर्पयामि॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[पुष्पोदक स्नान]

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – पुष्पोदकस्नानं समर्पयामि॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[अक्षतोदक स्नान]

**नित्यं शुद्धं निराकारं निराभासं निरंजनम्। नित्यबोधं चिदानंदं गुरुं ब्रह्म नमाम्यहम् ॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – अक्षतोदकस्नानं समर्पयामि॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[सुवर्णोदक स्नान]

**वेदांतार्थाभिधानेन सर्वानुग्रह-कारिणम्। यति-रूप-धरं वंदे शंकरं लोक-शंकरम् ॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – सुवर्णोदकस्नानं समर्पयामि॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[रुद्राक्षोदक स्नान]

**हर-लीलावताराय शंकराय वरौजसे। कैवल्यकलनाकल्पतरवे गुरवे नमः ॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – रुद्राक्षोदकस्नानं समर्पयामि॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[भस्म स्नान]

**नमः श्री-शंकराचार्य-गुरवे शंकरात्मने। शरीरिणां शंकराय शंकर-ज्ञान-हेतवे ॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – भस्मस्नानं समर्पयामि॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[बिल्वोदक स्नान]

**यत्पादपंकजध्यानात् तोटकाद्या यतीश्वराः। बभूवुस्तादृशं वंदे शंकरं षण्मतेश्वरम् ॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – बिल्वोदकस्नानं समर्पयामि॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[दूर्वोदक स्नान]

**प्रचार्यं सर्वलोकेषु संचार्य हृदयांबुजे । विचार्य सर्ववेदांतैः आचार्यं शंकरं भजे ॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – दूर्वोदकस्नानं समर्पयामि॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

[शुद्धोदक स्नान]

**संसाराब्धि-निषण्णाज्ञ-निकर-प्रोद्दिधीर्षया। कृत-संहननं वंदे भगवत्पाद-शंकरम् ॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – शुद्धोदकस्नानं समर्पयामि॥**

## ॥ अभिषेकः ॥

**वाराणसीपुरी रम्यगङ्गातीरनिषेवक । गङ्गादितीर्थैः श्रीरुद्रमन्त्रैस्त्वां स्नपयाम्यहम्॥**

**नमो भवाय शर्वाय रुद्राय वरदाय च । पशूनां पतये नित्यमुग्राय च कपर्दिने ॥**

**महादेवाय भीमाय त्र्यम्बकाय च शान्तये । मखघ्नाय नमोऽस्त्वन्धकघातिने ॥**

**कुमारगुरवे तुभ्यं नीलग्रीवाय वेधसे । पिनाकिने हविष्याय सत्याय विभवे सदा ॥**

**विलोहिताय धूम्राय व्याधायानपराजिते । नित्यं नीलशिखण्डाय शूलिने दिव्यचक्षुषे ॥**

**होत्रे पोत्रे त्रिनेत्राय व्याधाय वसुरेतसे । अचिन्त्यायाम्बिकाभर्त्रे सर्वदेवस्तुताय च ॥**

**वृषध्वजाय मुण्डाय जटिने ब्रह्मचारिणे । तप्यमानाय सलिले ब्रह्मण्यायाजिताय च ॥**

**विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते । नमोनमस्ते सेव्याय भूतानां प्रभवे सदा ॥**

**ब्रह्मवक्त्राय सर्वाय शंकराय शिवाय च । नमोस्तु वाचस्पतये प्रजानां पतये नमः ॥**

**अभिगम्याय काम्याय स्तुत्यायार्याय सर्वदा । नमोऽस्तु देवदेवाय महाभूतधराय च ।**

**नमो विश्वस्य पतये पत्तीनां पतये नमः । नमो विश्वस्य पतये महतां पतये नमः ॥**

**नमः सहस्रशिरसे सहस्र भुजमृत्यवे । सहस्रनेत्रपादाय नमोऽसङ्ख्येयकर्मणे ॥**

**नमो हिरण्यवर्णाय हिरण्यकवचाय च । भक्तानुकम्पिने नित्यं सिध्यतां नो वरः प्रभो ॥**

**नमस्ते देवदेवाय नमस्ते रुद्रमन्यवे। नमस्ते चन्द्रचूडायाप्युतोत इषवे नमः॥१॥**

**नमस्ते पार्वतीकान्त एकरूपाय धन्वने। नमस्ते भगवन् शम्भो बाहुभ्यामुत ते नमः॥२॥**

**इषुः शिवतमा या ते तया मृडय रुद्र माम्। शिवं धनुर्यद्बभूव तेनापि मृडयाधुना॥३॥**

शरव्या या शिवतमा तयापि मृडय प्रभो। या ते रुद्र शिवा नित्यं सर्वमङ्गलसाधनम्॥४॥
तयाऽभिचाकशीहि त्वं तनुवा मामुमापते। अघोरयापि तनुवा रुद्राऽऽद्याऽपापकाशिनी॥५॥
या तया मृडय स्वामिन् सदा शन्तमया प्रभो। गिरिशन्त महारुद्र हस्ते यामिषुमस्तवे॥६॥
विभर्षि तां गिरित्राद्य शिवां कुरु शिवापते। शिवेन वचसा रुद्र नित्यं वाच्छा वदामसि॥७॥
त्वद्भक्तिपरिपूताङ्गं मा हिꣳसीः पुरुषं जगत्। यन्नः शर्व जगत्सर्वमक्ष्मꣳ सुमना असत्॥८॥
यथा तथाव मां रुद्र तदन्यदपि मे प्रभो। रुद्रत्वं प्रथमो दैव्यो भिषक् पापविनाशकः॥९॥
अधिवक्ताऽध्यवोचन्मां भावलिङ्गार्चकं मुदा। अहीन् सर्वान् यातुधान्यः सर्वा अप्यद्य जम्भयन्॥१०॥
असौ ताम्रोऽरुणो बभ्रुः नीलग्रीवः सुमङ्गलः। विलोहितोऽस्त्ययं शम्भो त्वदधिष्ठानमेव हि॥११॥
नमो नमस्ते भगवन् नीलग्रीवाय मीढुषे। सहस्राक्षाय शुद्धाय सच्चिदानन्दमूर्तये॥१२॥
उभयोरार्त्नियोर्ज्या या धन्विनस्तां प्रमुञ्चताम्। सम्प्राप्य धनुरन्येषां भयाय प्रभविष्यति॥१३॥
अस्मद्भयविनाशार्थमधुना भयदाः प्रभो। याश्च ते हस्त इषवः पराता भगवो वप॥१४॥
अवतत्य धनुस्तत् त्वं सहस्राक्ष शतेषुधे। मुखा निशीर्य शल्यानां शिवो नः सुमना भव॥१५॥
विज्यं धनुरिदं भूयात् विशल्यो बाणवानपि। अनेशन्निषवोऽप्यस्याप्याभुरस्तु निषङ्गधिः॥१६॥
कपर्दिनो महेशस्य यदि नाभुर्निषङ्गधिः। इषवोऽपि समर्थाश्चेत् साग्रत्वेन भयं भवेत्॥१७॥
या ते हेतिर्धनुर्हस्ते मीढुष्टम बभूव या। तयाऽस्मान् विश्वतस्तेन पालय त्वमयक्ष्मया॥१८॥
अनाततायायुधाय नमस्ते धृष्णवे नमः। बाहुभ्यां धन्वने शम्भो नमो भूयो नमो नमः॥१९॥
परिते धन्वनो हेतिः विश्वतोऽस्मान् वृणक्तु सः। इषुधिस्तव यस्तावत् अस्मदारे निधेहि तम्॥२०॥
हिरण्यबाहवे तुभ्यं सेनान्ये ते नमो नमः। दिशां च पतये तुभ्यं पशूनां पतये नमः॥२१॥
त्विषीमते नमस्तुभ्यं नमः सस्पिञ्जराय ते। नमः पथीनां पतये बभ्लुशाय नमो नमः॥२२॥
नमो विव्याधिनेन्नानां पतये प्रभवे नमः। नमस्ते हरिकेशाय रुद्रायास्तूपवीतिने॥२३॥
पुष्टानां पतये तुभ्यं जगतां पतये नमः। संसारहेतिरूपाय रुद्रायाप्याततायिने॥२४॥
क्षेत्राणां पतये तुभ्यं सूताय सुकृतात्मने। अहन्त्याय नमस्तुभ्यं वनानां पतये नमः॥२५॥
रोहिताय स्थपतये मन्त्रिणे वाणिजाय च। कक्षाणां पतये तुभ्यं नमस्तुभ्यं भुवन्तये॥२६॥
तद्वारिवस्कृतायास्तु महादेवाय ते नमः। ओषधीनां च पतये नमस्तुभ्यं महात्मने॥२७॥
उच्चैर्घोषाय धीराय धीरान् क्रन्दयते नमः। पत्तीनां पतये तुभ्यं कृत्स्नवीताय ते नमः॥२८॥
धावते धवलायापि सत्त्वनां पतये नमः। नमस्ते सहमानाय तुभ्यं निव्याधिने नमः॥२९॥
आव्याधिनीनां पतये ककुभाय निषङ्गिणे। स्तेनानां पतये तुभ्यं दिव्येषुधिमते नमः॥३०॥

तस्कराणां च पतये वञ्चते परिवञ्चते। स्तायूनां पतये तुभ्यं नमस्तेऽस्तु निचेरवे॥ ३१॥

नमः परिचरायापि महारुद्राय ते नमः। अरण्यानां च पतये मुष्णतां पतये नमः॥ ३२॥

उष्णीषिणे नमस्तुभ्यं नमो गिरिचराय ते। कुलुञ्चानां च पतये नमस्तुभ्यं भवाय च॥ ३३॥

नमो रुद्राय शर्वाय तुभ्यं पशुपते नमः। नम उग्राय भीमाय नमो अग्रेवधाय च॥ ३४॥

नमो दूरेवधायापि नमो हन्त्रे नमो नमः। हनीयसे नमस्तुभ्यं नीलग्रीवाय ते नमः॥ ३५॥

नमस्ते शितिकण्ठाय नमस्तेऽस्तु कपर्दिने। नमस्ते व्युप्तकेशाय सहस्राक्षाय मीढुषे॥ ३६॥

गिरिशाय नमस्तेऽस्तु शिपिविष्टाय ते नमः। नमस्ते शम्भवे तुभ्यं मयोभव नमोऽस्तु ते॥ ३७॥

मयस्कर नमस्तुभ्यं शङ्कराय नमो नमः। नमः शिवाय शर्वाय नमः शिवतराय च॥ ३८॥

नमस्तीर्थ्याय कूल्याय नमः पार्याय ते नमः। अवार्याय नमस्तेस्तु नमः प्रतरणाय च॥ ३९॥

नम उत्तरणायापि हरातार्याय ते नमः। अलाद्याय नमस्तेऽस्तु भक्तानां वरदाय च॥ ४०॥

नमः शष्प्याय फेन्याय सिकत्याय नमो नमः। प्रवाह्याय नमस्तेऽस्तु ह्रस्वायास्तु नमो नमः॥ ४१॥

वामनाय नमस्तेऽस्तु नमोऽस्तु बृहते नमः। वर्षीयसे नमस्तेऽस्तु नमो वृद्धाय ते नमः॥ ४२॥

संवृध्वने नमस्तुभ्यमग्रियाय नमो नमः। प्रथमाय नमस्तुभ्यमाशवे चाजिराय च॥ ४३॥

शीघ्रियाय नमस्तेऽस्तु शीभ्याय च नमो नमः। नम ऊर्व्याय शर्वायाप्यवस्वन्याय ते नमः॥ ४४॥

स्रोतस्याय नमस्तुभ्यं द्वीप्याय च नमो नमः। ज्येष्ठाय च नमस्तुभ्यं कनिष्ठाय नमो नमः॥ ४५॥

पूर्वजाय नमस्तुभ्यं नमोऽस्त्वपरजाय च। मध्यमाय नमस्तुभ्यमपगल्भाय ते नमः॥ ४६॥

जघन्याय नमस्तुभ्यं बुध्नियाय नमो नमः। सोभ्याय प्रतिसर्याय ते याम्याय नमो नमः॥ ४७॥

क्षेम्याय च नमस्तुभ्यं याम्याय च नमो नमः। उर्वर्याय नमस्तुभ्यं खल्याय च नमो नमः॥ ४८॥

श्लोक्याय चावसान्यायावस्वन्याय च ते नमः। नमो वन्याय कक्ष्याय मौञ्जयाय च नमो नमः॥ ४९॥

श्रवाय च नमस्तुभ्यं प्रतिश्रव नमो नमः। आशुषेणाय शूराय नमोऽस्त्वाशुरथाय च॥ ५०॥

वरूथिने वर्मिणे च बिल्मिने च नमो नमः। श्रुताय श्रुतसेनाय नमः कवचिने नमः॥ ५१॥

दुन्दुभ्याय नमस्तुभ्यमाहनन्याय ते नमः। प्रहिताय नमस्तुभ्यं धृष्णवे प्रमृशाय च॥ ५२॥

पाराय पारविन्दाय नमस्तीक्ष्णेषवे नमः। सुधन्वने नमस्तुभ्यं स्वायुधाय नमो नमः॥ ५३॥

नमः स्रुत्याय पथ्याय नमः काट्याय ते नमः। नमो नीप्याय सूद्याय सरस्याय च ते नमः॥ ५४॥

अवर्ष्याय च वर्ष्याय मेध्याय च नमो नमः। विद्युत्याय नमस्तुभ्यमीध्रियाय नमो नमः॥ ५५॥

नमो नाद्याय भव्याय वैशन्ताय नमो नमः। अवट्याय नमस्तुभ्यं नमः कूप्याय ते नमः॥ ५६॥

आतप्याय नमस्तुभ्यं वात्याय च नमो नमः। रेष्मियाय नमस्तुभ्यं वास्तव्याय च ते नमः॥ ५७॥

वास्तुपाय नमस्तुभ्यं नमस्सोमाय ते नमः। नमो रुद्राय ताम्रायप्यरुणाय च ते नमः॥५८॥

नम उग्राय भीमाय नमः शङ्गाय ते नमः। नमस्तीर्थ्याय कूल्याय सिकत्याय नमो नमः॥५९॥

प्रवाह्याय नमस्तुभ्यमिरिण्याय नमो नमः। नमस्ते चन्द्रचूडाय प्रपथ्याय नमो नमः॥६०॥

किंशिलाय नमस्तेऽस्तु क्षयणाय च ते नमः। कपर्दिने नमस्तेऽस्तु नमस्तेऽस्तु पुलस्तये॥६१॥

नमो गोष्ठ्याय गृह्याय ग्रहाणां पतये नमः। नमस्तल्प्याय गेह्याय गुहावासाय ते नमः॥६२॥

काट्याय गह्वरेष्ठाय हृदय्याय च ते नमः। निवेष्प्याय नमस्तुभ्यं पांसव्याय ते नमः॥६३॥

रजस्याय नमस्तुभ्यं परात्परतराय च। नमस्ते हरिकेशाय शुष्क्याय च नमो नमः॥६४॥

हरित्याय नमस्तुभ्यं हरिद्वर्णाय ते नमः। नम ऊर्व्याय सूर्म्याय पर्ण्याय च नमो नमः॥६५॥

नमोऽपगुरमाणाय पर्णशद्याय ते नमः। अभिघ्नते चाख्खिदते नमः प्रख्खिदते नमः॥६६॥

विश्वरूपाय विश्वाय विश्वाधाराय ते नमः। त्रियम्बकाय रुद्राय गिरिजापतये नमः॥६७॥

मणिकोटीरकोटिस्थकान्तिदीप्ताय ते नमः। वेदवेदान्तवेद्याय वृषारूढाय ते नमः॥६८॥

अविज्ञेयस्वरूपाय सुन्दराय नमो नमः। उमाकान्त नमस्तेऽस्तु नमस्ते सर्वसाक्षिणे॥६९॥

हिरण्यबाहवे तुभ्यं हिरण्याभरणाय च। नमो हिरण्यरूपाय रूपातीताय ते नमः॥७०॥

हिरण्यपतये तुभ्यमम्बिकापतये नमः। तदुमापतये तुभ्यं नमः पापप्रणाशक॥७१॥

मीढुष्टमाय दुर्गाय कद्रुद्राय प्रचेतसे। तथ्यसे बिल्वपूज्याय नमः कल्याणरूपिणे॥७२॥

अपारकल्याणगुणार्णवाय श्रीनीलकण्ठाय निरञ्जनाय।

कालान्तकायापि नमो नमस्ते दिक्कालरूपाय नमो नमस्ते॥७३॥

वेदान्तवन्दिस्तुतसद्गुणाय गुणप्रवीणाय गुणाश्रयाय।

श्रीविश्वनाथाय नमो नमस्ते काशीनिवासाय नमो नमस्ते॥७४॥

अजातसौन्दर्यसुधानिधानसमृद्धिरूपाय शिवाधवाय।

धाराधराकार नमो नमस्ते धारास्वरूपाय नमो नमस्ते॥७५॥

नीहारताराकरकाकराय प्रकारहारप्रतिहारवीर। वीरेश्वरापारदयानिधान पाहि प्रभो पाहि नमो नमस्ते॥

नमस्ते निर्विकाराय नमस्तेऽनन्तचक्षुषे । नमस्तेनन्तहस्ताय नमस्तेऽनन्तरूपिणे ॥ १ ॥

नमस्ते देवदेवाय नमस्ते ऽनन्तमूर्त्तये । नमो लोकैकनाथाय नमस्ते सर्वसाक्षिणे ॥ २ ॥

नमस्ते निर्गुणानन्त नमस्ते निर्गुणात्मने । नमस्ते जगदाधार नमस्ते विश्वभानवे ॥ ३ ॥

नमस्ते सत्त्वरूपाय नमस्ते लोकरूपिणे । नमस्ते सर्वरूपाय रूपातीताय ते नमः ॥ ४ ॥

**नमस्ते शुद्धबुद्धाय नमस्ते परमात्मने । नमस्ते लिंगरूपाय नमस्ते विह्वराय च ॥ ५ ॥**

**नमो वेदान्तवेद्याय नमस्ते वेदरूपिणे । नमस्ते ज्ञानरूपाय नमस्ते ज्ञानदायिने ॥ ६ ॥**

**नमस्ते निष्प्रपंचाय निरीहाय नमोस्तुते । निर्द्वन्द्वाय नमस्तेस्तु निर्मूलाय च ते नमः ॥ ७ ॥**

**निरवद्य नमस्तेस्तु निरामय नमोस्तुते । निष्कलंक नमस्तेस्तु व्यापकाय नमोस्तुते ॥ ८ ॥**

**नमस्ते यज्ञरूपाय यज्ञकर्त्रे नमोस्तुते । नमस्ते भूरिरूपाय नमस्ते शर्मदायिने ॥ ९ ॥**

**नमो हिरण्यहस्ताय सेनान्यै ते नमो नमः । नमो दिक्पतये नित्यं दक्षिणापतये नमः ॥ १० ॥**

**नमः शष्पाभदेहाय नमस्तेऽस्तु त्विषीमते । नमो ऋषीणां पतये वभ्रूषाय नमोऽस्तुते ॥ ११ ॥**

**विव्याधिने नमोऽन्नानां पतये ते नमो नमः । नमस्ते हरिकेशाय नमो भव्योपवीतिने ॥ १२ ॥**

**पुष्टानां पतये तुभ्यं नमस्ते पुष्टिदायिने । जगतां पतये नित्यं नमो रुद्राय ते नमः ॥ १३ ॥**

**परातातायिने नित्यं नमस्ते गूढरूपिणे । नमोऽहन्त्रेऽथ सूताय क्षेत्राणां पतये नमः ॥ १४ ॥**

**नमस्ते दीर्घरूपाय विश्वगुप्ताय ते नमः । वनानां पतये नित्यं रोहिताय नमोऽस्तुते ॥ १५ ॥**

**नमः स्थपतये नित्यं वृक्षाणां पतये नमः । नमस्ते मन्त्रिणे नित्यं वाणिज्याय नमोऽस्तुते ॥ १६ ॥**

**कक्षाणां पतये नित्यं नमस्ते तु भुवंतये । नमो वारिकृतायेश नमस्ते वारिरूपिणे ॥ १७ ॥**

**उच्चैर्घोषाय वीराय नित्याक्रन्दाय ते नमः । पत्तीनां पतये नित्यं कृत्स्नवीताय ते नमः ॥ १८ ॥**

**नमस्ते धावते नित्यं पशुनां पतये नमः । नमस्ते सहमानाय मानातीताय ते नमः ॥ १९ ॥**

**नमो हर व्याधिनीनां पतये ज्ञानचक्षुषे नमस्ते । ककुभायेश कामरूपाय ते नमः ॥ २० ॥**

**निषङ्गिणे नमस्तेऽस्तु दिव्यबुद्धिमते नमः । नमस्ते तस्कराणां च पतये नीतिदायिने ॥ २१ ॥**

**नमस्ते वंचते नित्यं नमस्ते परिवञ्चते । स्तायूनांपतये नित्यं नमस्तेस्तु निचेरवे ॥ २२ ॥**

**नमः परिचरायेति परात्परनमोस्तुते । अरण्यानांश्च पतये नमो विश्वात्मकाय ते ॥ २३ ॥**

**मुष्णतां पतये नित्यं नमस्ते पापनाशक । प्रकृतीनां च पतये नीलोष्णीषाय ते नमः ॥ २४ ॥**

**नमो गिरिचरायेश, गिरिवर्य प्रियाय ते । कुलुञ्चानां च पतये नमस्ते सिंहरूपिणे ॥ २५ ॥**

**नमो विचित्रवेशाय, वेदवषट्कृते नमः । वेदमार्गाय दुर्गाय नमस्ते पाशधारिणे ॥ २६ ॥**

**नमः परशुहस्ताय नमस्ते शूलधारिणे । नमस्ते मृगहस्ताय नमस्ते मृगरूपिणे ॥ २७ ॥**

**नमो भवाय रुद्राय नमः शर्वाय सर्वदा । पशुपाशहरायेश नमः पशुपतीश ते ॥ २८ ॥**

**नम उग्राय ते नित्यं भीमाय भयदायिने । अग्रेवधाय भूताय नमो दूरेवधाय च ॥ २९ ॥**

**हंत्रे हनीयसे नित्यं नमस्ताराय ते नमः । नमस्ते शंभवे नित्यं नमस्तेस्तु मयोभवे ॥ ३० ॥**

**शंकराय नमस्तेस्तु सर्वज्ञाय नमोस्तु ते । नमो मयस्करायेश नमो मेषाय ते नमः ॥ ३१ ॥**

नमः शिवाय देवाय नमः शिवतराय ते । नमस्तीर्थ्याय कुल्याय नमः पार्याय ते नमः ॥ ३२ ॥
नमोऽवार्याय देवाय नमः प्रतरणाय च । नम उत्तरणायेश तीर्थ्याय च नमो नमः ॥ ३३ ॥
कूल्याय च नमस्तेऽस्तु नमः शष्प्याय ते तथा। नमः फेन्याय देवाय सिकत्याय च ते नमः॥ ३४ ॥
प्रवाह्याय नमस्तेऽस्तु इरिण्याय नमो नमः । प्रपथ्याय नमस्तेऽस्तु किं शिलाय नमो नमः ॥ ३५ ॥
नमस्तेऽस्तु सदादेव क्षयणाय कपर्दिने । पुलस्त्याय नमस्तेऽस्तु नमो गोष्ठ्याय ते सदा ॥ ३६ ॥
नमो गुह्याय तल्प्याय गेह्याय च नमोऽस्तुते । काष्ठाय गह्वरेष्ठाय हृदय्याय च ते नमः ॥ ३७ ॥
निवेष्याय नमो नित्यं पांसव्याय च ते नमः । रजस्याय नमो नित्यं शुष्क्याय च नमोस्तुते ॥ ३८ ॥
हरित्याय नमो देव नमो लोप्याय ते सदा । उलप्याय नमस्तेऽस्तु नम उर्व्याय ते नमः ॥ ३९ ॥
नमः सूर्व्याय पर्णाय पर्णशदाय ते नमः । नम उद्गुरमाणाय नमस्तेऽभिघ्नते सदा ॥ ४० ॥
नम आखिद्यमानायाघं मे खेदपते नमः । नमो विश्वस्वरूपाय गुणातीताय ते नमः ॥ ४१ ॥
नीलग्रीवाय नित्याय शितिकण्ठाय ते नमः । गुप्तकेशाय ते नित्यं सहस्राक्षय ते नमः ॥ ४२ ॥
नमस्ते घोररूपाय नमस्ते शतधन्वने । गिरिशाय नमस्तेस्तु शिपिविष्टाय ते नमः ॥ ४३ ॥
मेढ्रसेक्तृतमायास्तु भवायेषुमते नमः । नमो ह्रस्वाय देवाय वामनाय नमो नमः ॥ ४४ ॥
नमोऽस्तु बृहते नित्यं नमो वर्षीयसे सदा । नमो वृद्धाय देवाय नमः संवर्धनाय च ॥ ४५ ॥
नमो ग्रीवाय शूराय प्रथमाय नमो नमः । आशवे ते नमो नित्यमजिराय नमो नमः ॥४६॥
शीघ्र्याय च नमो नित्यं शीभ्याय महते नमः । नम ऊर्म्याय भव्याय वस्वन्याय नमो नमः ॥४७॥
स्रोतस्याय नमो नित्यं द्वीप्याय च नमो नमः । नमो ज्येष्ठाय शूराय कनिष्ठाय च ते नमः ॥४८॥
पूर्वजाय नमस्तेस्तु नमस्ते परजाय च । मध्यमाय नमस्तेस्तु कूष्मांडाय च ते नमः ॥४९॥
नमः परंपरायेश ताराय सकलात्मने । जघन्याय नमस्तेऽस्तु बुध्न्याय च नमो नमः ॥५०॥
सोभ्याय प्रतिसर्याय नमो याम्याय ते नमः । नमः क्षेम्याय वर्याय उर्वर्याय नमो नमः ॥५१॥
श्लोक्याय चा वसान्याय नमो मंगलरूपिणे । नमो वन्याय कक्ष्याय श्रवाय च नमो नमः ॥५२॥
प्रतिश्रवाय शान्ताय शरण्याय नमो नमः । नमो मदाशुषेणाय नमश्चाशुरयाय च ॥५३॥
नमः शूरस्वरूपाय भेत्रे चाभयदायिने । नमोऽस्तु वर्मिणे तुभ्यं नमो नित्यं वरूथिने ॥५४॥
बिल्मिने ते नमो नित्यं नमः कवचिने सदा । श्रुताय श्रुतसेनाय दुन्दुभ्याय च ते नमः ॥५५॥
नमस्ते आहनन्याय धृष्णवे प्रमृशाय च । तीक्ष्णेशवे नमस्तुभ्यं नम आयुधिने सदा ॥५६॥
नमो गोप्त्रे विश्वहंत्रे स्वायुधाय सुधन्वने । नमः स्रुत्याय पथ्याय नमः शुद्धाय ते नमः ॥५७॥
सरस्याय नमो नित्यं नादेयाय नमो नमः । वैशन्ताय नमस्तुभ्यमग्रगण्याय ते नमः ॥५८॥

नमस्त्वभयरूपाय नमः कूप्याय ते सदा । नमो वट्यायावर्ष्याय वर्ष्याय मृतरूपिणे ॥ ५९ ॥
नमो मेघ्याय भौमाय विद्युताय नमो नमः । नमो वीद्ध्याय ते नित्यमातप्याय नमो नमः ॥६०॥
नमो वात्याय रेष्म्याय वास्तव्याय नमो नमः । वास्तुपाय नमस्तेऽस्तु नमः साम्बाय सर्वदा ॥६१॥
नमश्चंद्र किरीटाय नियताय नमोऽस्तु ते । नमो ब्रह्मण्यदेवाय देवेशाय नमो नमः ॥६२॥
नमो विश्वैकवन्द्याय सर्वाधारायते नमः । नमोनन्तगुणोपेत सोम सर्वोत्तम प्रभो ॥६३॥
नमस्ते त्र्यम्बक श्रीमन्नमस्ताम्राय ते नमः । नमो विश्वैकनिलय नमो विश्वैकसंस्तुते ॥६४॥
नमो विधूतपापाय महादेवाय ते नमः । नमस्ते पार्वतीनाथ नमस्ते त्रिपुरान्तक ॥६५॥
नमस्ते करुणासिन्धो नमस्ते भक्तवत्सल । नमस्त्रिकाग्निकालाय कालकालाय ते सदा ॥ ६६ ॥
नमस्ते कालरूपाय नमस्ते वरदायक । नमः सर्वोत्तम श्रीमन् सदाशिव नमोऽस्तुते ॥६७॥
नमो भवाय भीमाय भर्गायाभयदायिने । देवतासार्वभौमाय शंभवे प्रभवे नमः ॥६८॥
नत्वदन्यो महादेव लोकनाथ जगन्मयः । न त्वदन्यः सुराराध्यो न त्वदन्यो जगत्प्रभुः ॥६९॥
न त्वदन्यो वेदवेद्यो न त्वदन्यः सुरेष्टदः । न त्वदन्यः सदा सेव्यो न त्वदन्यो जगत्पिता ॥७०॥
त्वमेव भूषणं रम्यं त्वमेव मम जीवनम् । त्वमेव मम माताऽसि त्वमेव हि पिता मम ॥७१॥
त्वमाराध्यो नमः शंभो मम देवोत्तम प्रभो । न त्ववन्यपदद्वन्द्वमर्चयामि कृपानिधे ॥७२॥
न श्रृणोमि कथां रम्यामन्यां शिवविवर्जिताम् । शिवनामान्यनामानि न वदामि महेश्वर ॥७३॥
शिव लिङ्गं विहायान्यद् ध्यानं च न कदाचन ॥७४॥
अपराधान् क्षमस्वेश मम शंकर सर्वग । स्वरूपं तव विज्ञातुं शक्यमेव न सर्वथा ॥७५॥
वेदैः सर्व रपि श्रीमत्तव रूपं सदाशिव । न ज्ञातं तादृशं रूपं मया ज्ञेयं कथं प्रभो ॥७६॥
लिङ्गस्याग्रं मया ज्ञातमन्या त्वं गतिरीश्वर । अपराधं क्षमस्वाद्य प्रमादादम्बिकापते ॥७७॥
अन्येऽपि मत्कृताः सर्वे क्षन्तव्याः परमेश्वर । अपराधाः कृपासिन्धो दीनवत्सल शंकर ॥७८॥
प्रणतं पाहि मां शंभो करुणारसवारिधे । मां नु मंच महादेव पाहि पाहि सदाशिव ॥७९॥
इति स्तुत्वा महादेवं प्रणम्य बहुधा तथा । कृताञ्जलिपुटो भूत्वा न्यवसन्न तकन्धरः ॥८०॥

नमो नमस्ते गिरिजासहाय नमो नमस्ते सुकृतस्वरूप।
नमो नमस्तेऽन्नपते महेश नमो नमस्तेऽस्तु नमो नमस्ते॥१॥
त्वत्पादाम्बुजभक्तिर्मे निश्चला भवतु प्रभो। त्वमेव शरणं शम्भो गतिस्त्वं जगतां प्रभो॥२॥
कर्माण्यस्य फलोन्मुखानि भगवंस्त्वत्पादपद्मं यतो, दृष्टं दोषविवर्जितं सुखयुतं यावत्करोति स्वतः।

तत्तावन्मुनिवृन्दमानसमनःपद्मप्रविष्टं प्रभो तन्मे मानसपङ्कजे क्षणमपि स्वामिन् प्रभो जायताम्॥३॥

वाजश्च मेऽस्तु प्रसवश्च मेऽस्तु त्वत्पूजया सा प्रयतिश्च मेऽस्तु।

महेश्वरानुप्रसितिश्च मेऽस्तु धीतिश्च मेऽस्तु क्रतुरस्तु शम्भो॥४॥

स्वरश्च मेऽस्तु स्वरदेश शम्भो श्लोकश्च मेऽस्तु श्रुतिगीतकीर्ते।

श्रावश्च मेऽस्तु श्रुतिरस्तु शम्भो शिवाभिधानश्रवणाय नित्यम्॥५॥

ज्योतिश्च मेऽस्तु ज्वलनस्वरूप सुवश्च मेऽस्तु त्रिपुरासुरारे।

प्राणश्च मे तावदपानयुक्तो व्यानश्च मेऽसुव तथैव चित्तम्॥६॥

आधीतं च तथा वाक्च मनश्चक्षुश्च मे प्रभो। श्रोत्रं दक्षो बलञ्चौञ्जः सहश्चायुश्च मे प्रभो॥७॥

जरा चात्मा च मे शम्भो तनूः शर्म च वर्म च। अङ्गान्यस्थीनि भगवन् परूंषि च भवन्तु मे॥८॥

शरीराणि भवन्त्वीश तानि रम्याणि मे प्रभो। ज्यैष्ठ्यं च मेऽधिपत्यं च मन्युर्भामश्च मे प्रभो॥९॥

अमश्चाम्भश्च जेमा च महिमा वरिमा च मे। प्रथिमा चास्तु गौरीश वर्ष्मा च द्राघुया च मे॥१०॥

वृद्धं वृद्धिश्च सत्यं च श्रद्धा चास्तु जगत्त्रये। धनं वशाऽस्त्विषिञ्चास्तु क्रीडा मोदश्च मे प्रभो॥११॥

जातं जनिष्यमाणं च सूक्तं मे सुकृतं च मे। वित्तं वेद्यं च भूतं च भविष्यच्च सुगं च मे॥१२॥

सुपथं ऋद्धमृद्धिश्च क्लृप्तं क्लृप्तिश्च मे मतिः। सुमतिः शं मयश्चास्तु प्रियं चास्तु शिवं शुभे॥१३॥

अनुकामश्च कामश्च शम्भो सौमनसं च मे। भद्रं श्रेयश्च वस्यं च यशो मेऽस्तु जगत्त्रये॥१४॥

द्रविणं चास्तु यन्ता च धर्ता क्षेमश्च मे धृतिः। विश्वं महश्च संविच्च ज्ञात्रं सूश्च प्रसूश्च मे॥१५॥

सीरं लय ऋतं चास्तु भगवन्नमृतं च मे। अयक्ष्मं चानामयं च जीवातुश्चापि मे सदा॥१६॥

दीर्घायुत्वानमित्रे च सर्वदाऽप्यभयं च मे। सुगं च शयनं सूषा सुदिनं चास्तु मे सदा॥१७॥

ऊर्क्च मे सूनृता चास्तु पयश्चास्तु रसश्च मे। घृतं मधु च सग्धिश्च सपीतिश्च कृषिश्च मे॥१८॥

वृष्टिच जैत्रमौद्भिद्यं रयिश्चास्तु सदापि मे। रायः पुष्टं च पुष्टिश्च विभु च प्रभु च प्रभो॥१९॥

बहु भूयश्च पूर्णं च तथा पूर्णतरं च मे। अक्षितिश्चास्तु भगवन् कूयवाश्च भवन्तु मे॥२०॥

अन्नमन्नपते मेऽस्तु तेनास्त्वक्षुच्च मे प्रभो। व्रीयश्च यवा माषाः तिला मुद्गाश्च मे शिव॥२१॥

खल्वाश्च सन्तु गोधूमाः मसुराश्च प्रियङ्गवः। अणवः सन्तु मे नित्यं श्यामाकाः सन्तु मे प्रभो॥२२॥

नीवाराद्याश्च मे सन्तु गृहे सर्वान्नकल्पकाः। अश्मा च मृत्तिका चास्तु गिरयः पर्वताश्च मे॥२३॥

सिकताः सन्तु भगवन् मे वनस्पतयश्च मे। हिरण्यमस्त्वयश्चास्तु तथा सीसं त्रपुश्च मे॥२४॥

श्यामं लोहं च मेऽग्निश्च गृहे तिष्ठन्तु सर्वदा। आपश्च वीरुधः सन्तु तथैवौषधयोऽपि मे॥२५॥

कृष्टपच्यं च बहुधा मम तिष्ठतु वेश्मनि। तथैवाकृष्टपच्यं च वनसम्भवमस्तु मे॥२६॥

गोमहिष्यादयो ग्राम्याः पशवः सन्तु मे गृहे। सदा यज्ञेन कल्पन्तामारण्याः पशवश्च मे॥२७॥
वित्तं वित्तिश्च भूतं च भूतिश्च वसतिर्वसु। शिवपूजादिकं कर्म शक्तिश्च शिवपूजने॥२८॥
एमश्चास्तु ममेतिश्च गतिश्चास्तु शिवार्चने। अग्निरिन्द्रश्च सोमश्च सविता च सरस्वती॥२९॥
पूषा बृहस्पतिर्मित्रः त्वष्टा च वरुणश्च मे। धाता च विष्णुरप्यस्तु गृहकर्मकरस्तु मे॥३०॥
अश्विनौ च ममेशान तिष्ठतां सर्वदा गृहे। मरुतश्च प्रसर्पन्तु विश्वेदेवाश्च मे गृहे॥३१॥
त्वदाज्ञावशगानेतान् अग्नीन्द्रादिसुरान् शिव। मद्वशान् कुरु विश्वेश दक्षान् मद्गृहकर्मणि॥३२॥
अन्तरिक्षं च पृथिवी द्यौरप्यस्तु दिशश्च मे। मूर्धा प्रजापतिश्चास्तु मे भवत्कृपया भव॥३३॥
अंशुश्च रश्मिरप्यस्तु मे दाभ्योऽधिपतिश्च मे। उपांशुरन्तर्यामश्च मम स्यादैन्द्रवायवः॥३४॥
मे मैत्रावरुणश्चास्तु तथैवास्तु ममाश्विनः। प्रतिप्रस्थानशुक्रौ च मन्थी चाग्रयणश्च मे॥३५॥
वैश्वदेवो ध्रुवश्चापि तथा वैश्वानरश्च मे। ऋतुग्रहाश्च मे सन्तु सातिग्राह्याश्च शङ्कर॥३६॥
ऐन्द्रागा वैश्वदेवश्च ग्रहाः सोमोपयोगिनः। तथा मरुत्वतीयाश्च ग्रहाः सन्तु सदाऽपि मे॥३७॥
माहेन्द्रश्च तथाऽऽदित्यः सावित्रश्चास्तु मे ग्रहः। सारस्वतश्च पौष्णश्च तथा पात्नीवतश्च मे॥३८॥
सहारीयोजनश्चास्तु ममेध्मश्चास्तु सर्वथा। बर्हिर्वेन्दिर्धिष्णियाश्च स्रुवश्च चमसाश्च मे॥३९॥
ग्रावाणः स्वरवः सन्तु तथैवोपरवाश्च मे। ते मे धिषवणे सन्तु ते द्रोणकलशश्च मे॥४०॥
वायव्यानि च मे सन्तु पूतभृच्चास्तु मे प्रभो। तथैवाघवनीयश्च तदाग्नीध्रं च मे प्रभो॥४१॥
हविर्धानं च मे स्वामिन् गृहाश्चैव सदश्च मे। पुरोडाशाश्च मे स्वामिन् पचताश्च भवन्तु मे॥४२॥
तथैवावभृथः सन्तु स्वगाकारश्च मे प्रभो। अग्निर्घर्मश्च मेऽर्कश्च सूर्यः प्राणश्च मे प्रभो॥४३॥
अश्वमेधश्च पृथिवी द्यौरप्यदितिरस्तु मे। मे शक्करीरङ्गुलयो दिशश्च विदिशश्च मे॥४४॥
तथा यज्ञेन कल्पन्तां ऋक् च साम च मे प्रभो। सोमो यजुश्च दीक्षा च तपश्चस्तु ऋतुश्च मे॥४५॥
तथाऽहोरात्रयोर्वृष्ट्या व्रतं च नियमात्मकम्। बृहद्रथन्तरे यज्ञे कल्पेतां भाललोचन॥४६॥
गर्भा वत्साश्च भगवन् त्र्यविश्चास्तु महेश्वर। त्र्यवी च मे दित्यवाट् च दित्यौही च सदाशिव॥४७॥
पञ्चाविश्च महादेव पञ्चावी च त्रिलोचन। त्रिवत्सश्च त्रिवत्सा च तुर्यवाडस्तु मे प्रभो॥४८॥
तुर्यौही पष्टवाट् चास्तु पष्ठौही च महेश्वर। उक्षा वशा च ऋषभो वेहोऽनड्वांस्तथास्तु मे॥४९॥
धेनुरप्यस्तु भगवन् क्षीरायातिमनोहरा। यज्ञेन कल्पतामायुः प्राणो यज्ञेन कल्पताम्॥५०॥
अपानोऽपि स यज्ञेन व्यानेन सह कल्पताम्। चक्षुः श्रोत्रं च यज्ञेन मनसा सह कल्पताम्॥५१॥
वागात्मापि तथा यज्ञोऽप्येवं यज्ञेन कल्पताम्। त्वदधीनमिदं सर्वं तवेति प्रार्थितं मया॥५२॥
सर्वस्वतन्त्रोऽसि महेश यस्मात् त्वमेव दाताऽसि तवापि देयाः।

उक्ताश्च तावच्चमकेन देहि तानस्वतन्त्रान् शिवपूजकाय॥५३॥
तेषां प्रदेयत्वविनिश्चयेन तान् देहि मां शिवपूजकाय।
ते तावदस्मद्गृहकर्मयोग्याः योग्येन योग्यस्य किलान्यवोऽपि॥५४॥
एते पदार्थाः प्रथितास्त्वदीयाः ते शर्व देयास्तव दानयोग्याः।
अहं शिवराधनसक्तचित्तः को वा मदन्योऽस्ति स दानयोग्यः॥५५॥
दातापि देयं सति दानयोग्ये विहाय कस्मै प्रददाति भक्त्या।
विद्वानतो देहि महेश तान् मे लोके मदन्यस्तु न कोऽपि पात्रम्॥५६॥
त्वद्दत्तमेतादृशभाग्यमेत्य त्वत्पादपूजानिरतो भवामि।
प्रमादलेशोऽपि तदा न भावी भवे भवे त्वत्पदपूजकस्य॥५७॥
मन्ये शङ्कर देवदेव भवतो दातृत्वमव्याहते, तेनाग्निप्रमुखान् सुरानपि सदा तानस्वतन्त्रान् स्वतः।
मह्यं देहि मदिच्छया परममी कुर्वन्तु कृत्यानि मे, शक्तिर्यस्य यथा तथाऽस्ति भगवन् सर्वस्वतन्त्र प्रभो॥
महाप्रभुः शम्भुरुमासहायो दयामयो भूतिमयोऽपि दाता।
माता पिता मे स हितप्रदाता धाता विधाता न सन्दक्॥५९॥
देयत्वेन विनिश्चितास्तव सुराः सर्वेऽपि वेदैरमी, दाता त्वं तव भाग्यमप्यविलयं भूयः समुज्जृम्भते।
अस्माकं तु महाप्रभुः भव भवानेवेति चित्तं मुहुः, स्वानन्दाम्बुधिवीचिकाऽतिचपला लीलाविलासास्पदम्॥

श्रुतिस्मृतिपुराणानाम् आलयं करुणालयम्। नमामि भगवत्पादशंकरं लोकशंकरम्॥
अज्ञानांतर्गहन-पतितान्-आत्मविद्योपदेशैः त्रातुं लोकान् भवदवशिखा-तापपापच्यमानान्।
मुक्त्वा मौनं वटविटपिनो मूलतो निष्पतंती शंभोर्मूर्तिश्चरति भुवने शंकराचार्यरूपा॥
यमाश्रिता गिरां देवी नंदयत्यात्म-संश्रितान्। तमाश्रये श्रिया जुष्टं शंकरं करुणा-निधिम्॥
श्रीगुरुं भगवत्पादं शरण्यं भक्तवत्सलम्। शिवं शिवकरं शुद्धम् अप्रमेयं नमाम्यहम्॥
नित्यं शुद्धं निराकारं निराभासं निरंजनम्। नित्यबोधं चिदानंदं गुरुं ब्रह्म नमाम्यहम्॥
सर्वतंत्रस्वतंत्राय सदात्माद्वैतरूपिणे । श्रीमते शंकरार्याय वेदांतगुरवे नमः॥
वेदांतार्थाभिधानेन सर्वानुग्रहकारिणम्। यतिरूपधरं वंदे शंकरं लोकशंकरम्॥
संसाराब्धि-निषण्णाज्ञ-निकर-प्रोद्दिधीर्षया। कृतसंहननं वंदे भगवत्पाद-शंकरम्॥
यत्-पाद-पंकज-ध्यानात् तोटकाद्या यतीश्वराः। बभूवुस्तादृशं वंदे शंकरं षण्मतेश्वरम्॥
नमः श्री-शंकराचार्य-गुरवे शंकरात्मने। शरीरिणां शंकराय शंकर-ज्ञान-हेतवे॥

हर-लीलावताराय शंकराय वरौजसे। कैवल्य-कलना-कल्प-तरवे गुरवे नमः॥
प्रचार्यं सर्व-लोकेषु संचार्य हृदयांबुजे । विचार्य सर्व-वेदांतैः आचार्यं शंकरं भजे॥
याऽनुभूतिः स्वयंज्योतिः आदित्येशानविग्रहा। शंकराख्या च तं नौमि सुरेश्वरगुरुं परम्॥
आनंद-घनमद्वंद्वं निर्विकारं निरंजनम्। भजेऽहं भगवत्पादं भजताम् अभयप्रदम् ॥
तं वंदे शंकराचार्यं लोक-त्रितय-शंकरम्। सत्-तर्क-नखरोद्गीर्ण-वावदूक-मतंगजम्॥
नमामि शंकराचार्यगुरुपादसरोरुहम्। यस्य प्रसादान्मूढोऽपि सर्वज्ञो भवति स्वयम्॥
संसार-सागरं घोरम् अनंत-क्लेश-भाजनम्। त्वामेव शरणं प्राप्य निस्तरंति मनीषिणः॥
नमस्तस्मै भगवते शंकराचार्यरूपिणे। येन वेदांतविद्येयम् उद्धृता वेद-सागरात्॥
भगवत्पाद-पादाब्ज-पांसवस्संतु संततम् । अपारासार-संसार-सागरोत्तार-सेतवः॥
एकः शाखी शंकराख्यश्चतुर्धा स्थानं भेजे ताप-शांत्यै जनानाम्।
शिष्य-स्कंधैः शिष्य-शाखैर्महद्भिः ज्ञानं पुष्पं यत्र मोक्षः प्रसूतिः॥
अज्ञान-तिमिरांधस्य ज्ञानांजन-शलाकया। चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥
आचार्यान् भगवत्पादान् षण्मत-स्थापकान् हितान्। परहंसान् नुमोऽद्वैत-स्थापकान् जगतो गुरून्॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः। गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः॥
अखण्डमण्डलाकारं व्याप्तं येन चराचरम्। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः॥
अनेकजन्म-संप्राप्त-कर्मबंधविदाहिने। आत्मज्ञान-प्रदानेन तस्मै श्रीगुरवे नमः॥
शिष्यैश्चतुर्भिर्गोविन्दश्चतुर्भिरिव बाहुभिः। विराजते मुनिश्रेष्ठस्तस्मै श्रीगुरवे नमः॥
विशुद्धविज्ञानघनं शुचिहार्दं तमोनुदम्। दयासिंधु लोकबंधुं शंकरं नौमि सद्गुरुम्॥
देहबुद्धया तु दासोऽस्मि जीवबुद्धया त्वदंशकः। आत्मबुद्धया त्वमेवाहमिति मे निश्चिता मतिः॥
विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया।
यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये॥
ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने। व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः॥ अमृताभिषेकोऽस्तु॥
श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः - स्नानाङ्गमाचमनीयमाचमनीयं समर्पयामि॥

## वस्त्रयुग्मम् –

भाष्यभागीरथीपाथः पवित्रीकृतभूतल। भाष्यप्रवचनासक्त वस्त्रयुग्मं ददामि ते॥
श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – वस्त्रयुग्मं समर्पयामि॥

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः - आचमनीयमाचमनीयं समर्पयामि ॥**

## श्रीगन्धम् –

**सनन्दनादि मेधाविपण्डितच्छात्र संवृत। सर्वशास्त्रार्थनिपुण गन्धान् धारय सादरम् ॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः - दिव्यगन्धान्धारयामि ॥**

## अक्षतम् –

**अज्ञान-तिमिरांधस्य ज्ञानांजन-शलाकया। चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः - गन्धस्योऽपरि अलङ्करणार्थे अक्षतान् समर्पयामि ॥**

## भस्मोद्धूलनम् –

**वृद्धवेषप्रतिच्छन्न व्याससन्दर्शनोत्सुक। भस्मोद्धूलितसर्वाङ्ग भस्म दिव्यं ददामि ते ॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – भस्मोद्धूलनं समर्पयामि ॥**

## कुङ्कुमचूर्णम् –

**व्यासदत्त वरप्राप्त षोडशाब्दायुरुज्वल। किङ्करीभूतभूपाल कुङ्कुमं ते ददाम्यहम् ॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – कुङ्कुमचूर्णं समर्पयामि ॥**

## रुद्राक्षमालिका –

**श्रीमन्मण्डनमिश्रादि वादकेळिविशारद। दुर्वादतूलवातूल भज रुद्राक्षमालिकाम् ॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – रुद्राक्षमालिकां समर्पयामि ॥**

## बिलवार्पण –

**श्रीमन्मण्डनकर्णोक्त महावाक्यादिमन्त्रक। सुरेश्वराख्या सन्दायिन् बिल्वपत्रं ददामि ते ॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – बिल्वपत्रं समर्पयामि ॥**

## पुष्पमालिका –

सुरेश पद्मचरण हस्तामलक तोटकैः। अन्यैश्च शिष्यैः संवीत पुष्पमालां ददामि ते॥
श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – पुष्पमालिकां समर्पयामि॥

## ॥ अथ पत्रपूजा ॥

श्री शिवरूपाय नमः - बिल्वपत्रं समर्पयामि।
श्री शक्तिरूपाय नमः - कदम्बपत्रं समर्पयामि।
श्री विष्णुरूपाय नमः - तुलसीपत्रं समर्पयामि।
श्री लक्ष्मीरूपाय नमः - तामरसपत्रं समर्पयामि।
श्री ब्रह्मरूपाय नमः - दाडिमीपत्रं समर्पयामि।
श्री सरस्वतीरूपाय नमः - मल्लिकापत्रं समर्पयामि।
श्री गणपतिरूपाय नमः - दूर्वापत्रं समर्पयामि।
श्री षण्मुखरूपाय नमः - मरुवकपत्रं समर्पयामि।
श्री श्रीचक्र रूपाय नमः - अशोकपत्रं समर्पयामि।
श्री श्रीदक्षिणामूर्तिरूपाय नमः - नानाविध पत्राणि समर्पयामि॥

## ॥ अथ पुष्पपूजा ॥

श्री शिवरूपाय नमः - जातीपुष्पं समर्पयामि।
श्री शक्तिरूपाय नमः - कदम्बपुष्पं समर्पयामि।
श्री विष्णुरूपाय नमः - तुलसीपुष्पं समर्पयामि।
श्री लक्ष्मीरूपाय नमः - पद्मपुष्पं समर्पयामि।
श्री ब्रह्मरूपाय नमः - श्वेतकमलपुष्पं समर्पयामि।
श्री सरस्वतीरूपाय नमः - मल्लिकापुष्पं समर्पयामि।
श्री गणपतिरूपाय नमः - कल्हारपुष्पं समर्पयामि।
श्री षण्मुखरूपाय नमः - जपापुष्पं समर्पयामि।
श्री श्रीचक्र रूपाय नमः - अशोकपुष्पं समर्पयामि।
श्री श्रीदक्षिणामूर्तिरूपाय नमः - नानाविध पुष्पाणि समर्पयामि॥

# ॥ श्रीशङ्कराचार्याष्टोत्तरशतनामावलिः ॥

श्री श्रीमत्कैलासनिलयशङ्कराय नमो नमः।
श्री ब्रह्मविद्याऽम्बिकाश्लिष्टवामाङ्गाय नमो नमः।
श्री ब्रह्मोपेन्द्रमहेन्द्रादिप्रार्थिताय नमो नमः।
श्री भक्तानुग्रहणैकान्तशान्तस्वान्ताय ते नमः।
श्री नास्तिकाक्रान्तवसुधा पालकाय नमो नमः।
श्री कर्मकाण्डावनस्कन्दप्रेषकाय नमो नमः।
श्री लोकानुग्रहणोपात्तनृदेहाय नमो नमः।
श्री कालटीक्षेत्रवासादिरसिकाय नमो नमः।
श्री पूर्णानदीतीरवासलोलुपाय नमो नमः।
श्री विद्याधिराजसद्वंशपावनाय नमो नमः ॥१०॥
श्री आर्याम्बिकागर्भवासनिर्भराय नमो नमः।
श्री शिवगुर्वाप्तसुकृतसत्फलाय नमो नमः।
श्री आर्याशिवगुरुप्रीतिभाजनाय नमो नमः।
श्री ईश्वराब्धीयवैशाखपञ्चमीजन्मने नमः।
श्री निजावतारानुगुण शङ्कराख्याभृते नमः।
श्री नामसंख्यासमुन्नेयजन्मकालाय ते नमः।
श्री शङ्कराख्यासुविख्यातमङ्गलाय नमो नमः।
श्री पितृदत्तान्वर्थभूतनामधेयाय ते नमः।
श्री बाललीलातोषितस्वमातृकाय नमो नमः।
श्री प्रथमाब्दाभ्यस्तनानाभाषाढ्याय नमो नमः ॥२०॥
श्री द्वितीयाब्दकृतस्वीयसच्चूडाकृतये नमः।
श्री निजताततवियोगार्तमात्राश्वासकृते नमः।
श्री मातृकारितसद्विप्रसम्स्काराय नमो नमः।
श्री पलाशदण्डमौञ्ज्यादिभासुराय नमो नमः।
श्री सन्ध्याग्निसेवानुष्ठाननिरताय नमो नमः।
श्री विद्यागुरुकुलैकान्तनिवासाय नमो नमः।
श्री विद्याग्रहणनैपुण्यविस्मापनकृते नमः।
श्री अभ्यस्यवेदवेदाङ्गसन्दोहाय नमो नमः।
श्री भिक्षाशनादिनियमपालकाय नमो नमः।
श्री विद्याविनयसम्पत्तिविख्याताय नमो नमः ॥३०॥
श्री भिक्षामलकसन्दातृसतीशोकहृते नमः।
श्री स्वर्णामलकसद्वृष्टिकारकाय नमो नमः।
श्री न्यायसांख्यादिशास्त्राब्धिमथनाय नमो नमः।
श्री जैमिनीयनयार्णोधिकर्णधाराय ते नमः।
श्री पातञ्जलनयारण्यपञ्चास्याय नमो नमः।
श्री मातृशुश्रूषणासक्तमानसाय नमो नमः।
श्री पूर्णासामीप्यसन्तुष्टमातृकाय नमो नमः।
श्री केरलेशकृतग्रन्थप्रेक्षकाय नमो नमः।
श्री दत्तराजोपहारादिनिराशाय नमो नमः।
श्री स्वावतारफलप्राप्तिनिरीक्षणकृते नमः ॥४०॥
श्री सन्न्यासग्रहणोपायचिन्तकाय नमो नमः।
श्री नक्रग्रहमिषावाप्तमात्राज्ञाय नमो नमः।
श्री प्रैषोच्चारणसंत्यक्तनक्रपीडाय ते नमः।
श्री अन्त्यकालस्वसानिध्यशम्सकाय नमो नमः।
श्री गोविन्दभगवत्पादान्वेषकाय नमो नमः।
श्री गोविन्दशिष्यताप्राप्तिप्रशम्सनकृते नमः।
श्री आर्यपादमुखावाप्तब्रह्मविद्याय ते नमः।
श्री नर्मदातटिनीतीरस्तम्भकाय नमो नमः।
श्री गुर्वनुज्ञातविश्वेशदर्शनाय नमो नमः।
श्री वाराणसीविश्वनाथक्षेत्रगाय नमो नमः ॥५०॥
श्री चण्डालाकृतिविश्वेशवादसंश्राविणे नमः।
श्री मनीषापञ्चकस्तोत्रश्रावकाय नमो नमः।
श्री साक्षात्कृतमहादेवस्वरूपाय नमो नमः।
श्री गुरुविश्वेश्वराज्ञप्तभाष्यग्रन्थकृते नमः।
श्री नानाभाष्यप्रकरणस्तोत्रजातकृते नमः।
श्री देवतागुरुविप्रादिभक्तिसंधुक्षिणे नमः।
श्री भाष्याद्यध्यापनासक्तमानसाय नमो नमः।
श्री आनन्दादिशिष्यौघसंवृताय नमो नमः।

श्री पद्मपादाभिधालाभहृष्टशिष्याय ते नमः।
श्री आचार्यभक्तिमाहात्म्यनिदर्शनकृते नमः॥६०॥
श्री वृद्धव्यासपरामृष्टभाष्यार्थाय नमो नमः।
श्री व्यासप्रशंसिताशेषभाष्यजाताय ते नमः।
श्री तत्तत्प्रश्नोत्तरश्रोतृव्यासप्रीतिकृते नमः।
श्री नारायणावतारत्वस्मारकाय नमो नमः।
श्री वेदव्यासवरप्राप्तषोडशाब्दायुषे नमः।
श्री कुमारिलजयाशम्साशम्सकाय नमो नमः।
श्री तुषाग्निस्थितभट्टोक्तिश्लाघकाय नमो नमः।
श्री सुब्रह्मण्यावतारश्रीभट्टनुग्राहिणे नमो नमः।
श्री मण्डनाख्यमहासूरिविजयाशम्सिने नमः।
श्री माहिष्मतीपुरोपान्तपावनाय नमो नमः॥७०॥
श्री शुकसूचिततद्गेहदर्शकाय नमो नमः।
श्री वादभिक्षापेक्षणादिस्वाशयोद्घाटिने नमः।
श्री व्यासजैमिनिसानिध्यवावदूकाय ते नमः।
श्री मण्डनीयप्रश्नजातोत्तरदात्रे  नमो नमः।
श्री मध्यस्थभारतीवाक्यप्रमाणाय नमो नमः।
श्री मालामालिन्यनिर्विण्णमण्डनार्यजिते नमः।
श्री प्रवृत्तिमार्गपारम्यवारकाय नमो नमः।
श्री कर्मकाण्डीयतात्पर्योद्धारकाय नमो नमः।
श्री ज्ञानकाण्डप्रमाणत्वसमर्थनकृते नमः।
श्री युक्तिसाहस्रतोऽद्वैतसाधकाय नमो नमः॥८०॥
श्री जीवब्रह्मैक्यसिद्धान्तसंस्थापनकृते नमः।
श्री निजापजयनिर्विण्णमण्डनेड्यपदे नमः।
श्री सन्यासकृन्मण्डनानुग्राहकाय  नमो नमः।
श्री महावाक्योपदेशादिदायकाय नमो नमः।

श्री सुरेश्वराभिधाजुष्टशिष्यानुग्राहिणे नमः।
श्री वनदुर्गामन्त्रबद्धभारतीवपुषे नमः।
श्री श्रृङ्गाद्रिक्षेत्रसानिध्यप्रार्थकाय नमो नमः।
श्री श्रीशारदादिव्यमूर्तिस्थापकाय नमो नमः।
श्री श्रृङ्गाद्रिशारदपीठसंस्थापनकृते नमः।
श्री द्वादशाब्दनिजावासपूतश्रृङ्गाद्रये नमः॥९०॥
श्री प्रत्यहं भाष्यपाठादिकालक्षेपकृते नमः।
श्री अन्त्यकालस्मृतिप्राप्तमातृपार्श्वाय ते नमः।
श्री मातृसंस्कारनिर्व्यूढप्रतिज्ञाय नमो नमः।
श्री पद्मपादीसमुद्धारप्रीतपद्माङ्घ्रये नमः।
श्री स्ववधोद्युक्तकापालिकोपेक्षणकृते नमः।
श्री स्वशिष्यमारितस्वीयमारकाय नमो नमः।
श्री परकायप्रवेशादियोगसिद्धिमते नमः।
श्री लक्ष्मीनृसिंहकरुणाशान्तदेहाधये नमः।
श्री गोकर्णनाथमूकाम्बासन्दर्शनकृते नमः।
श्री मृतपुत्रोज्जीवनादिमहाश्चर्यकृते नमः॥१००॥
श्री मूकबालकसम्भाषाद्यमानुषकृते नमः।
श्री हस्तामलकनामाढ्यशिष्योपेताय ते नमः।
श्री चतुर्दिक्कतुराम्नायस्थापकाय नमो नमः।
श्री तोटकाभिधसच्छिष्यसंग्रहाय नमो नमः।
श्री हस्ततोटकपद्मांघ्रिसुरेशाराध्य ते नमः।
श्री काश्मीरगतसर्वज्ञपीठगाय नमो नमः।
श्री केदारान्तर्धिकैलासप्राप्तिकर्त्रे नमो नमः।
श्री कैलासाचलसंवासिपार्वतीशाय ते नमः।
श्री मङ्गलौघलसत्सर्वमङ्गलापतये नमः॥१०८॥

## धूपम् –

सर्वज्ञपीठिकारोहसमुत्सुकितमानस। सर्वज्ञमूर्ते सर्वात्मन् धूपमाजिघ्र सादरम्॥
श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – धूपमाघ्रापयामि॥

## दीपम् –

**सरस्वतीकृतप्रश्नोत्तरदानविचक्षण। शृङ्गाद्रिस्थानतत्संस्थाकारिन् दीपं गृहाण भोः॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः - दीपं दर्शयामि॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – धूपदीपानन्तरं आचमनीयमाचमनीयं समर्पयामि॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – आचमनानन्तरं परिमलपत्रपुष्पाणि समर्पयामि॥**

## नैवेद्यम् –

अच्युताय नमः। अनन्ताय नमः। गोविन्दाय नमः। [नैवेद्यपदार्थान् गायत्र्या प्रोक्ष्य]
**श्रीगुरुं भगवत्पादं शरण्यं भक्तवत्सलम्। शिवं शिवकरं शुद्धम् अप्रमेयं नमाम्यहम्॥**
**कामधेनुं स्मरामि** [धेनुमुद्रां प्रदर्श्य]
**षण्मतस्थापनाचार्य षड्दर्शनविशारद। गृहाण षड्रसोपेतं भक्ष्यभोज्यादिकं प्रभो॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – नैवेद्यं समर्पयामि॥**

**सर्वदिक् चतुराम्नायव्यवस्थापक शङ्कर। सर्वलोकैकसम्पूज्य पानीयं प्रतिगृह्यताम्॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः - मध्ये मध्ये अमृतपानीयं समर्पयामि॥**
**उत्तरापोशनं समर्पयामि।**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – हस्तप्रक्षाळनं समर्पयामि।**
**गण्डूषं समर्पयामि। पादप्रक्षाळनं समर्पयामि।**
**आचमनीयमाचम्नीयं समर्पयामि। करोद्वर्तनं समर्पयामि॥**

## ताम्बूलम् –

**सर्वलोकसुविख्यात यशोराशिनिशाकर। सर्वात्मभूत सुगुरो ताम्बूलं प्रददामि ते॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – पूंगीफल ताम्बूलं समर्पयामि॥**

## मङ्गलनीराजनम् –

**साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ठिकं राज्यं महाराज्यमाधिपत्यम्॥**
**प्रस्थानत्रयीभाष्यनिर्माणैक विशारद। अज्ञानतिमिरोत्सारिन् पश्य नीराजनप्रभाम्॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः - दिव्यमङ्गलनीराजनं दर्शयामि॥**

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – नीराजनानन्तरं आचमनीयमाचमनीयं समर्पयामि।**
**आचमनानन्तरं परिमलपत्रपुष्पाणि समर्पयामि॥**

## रक्षाधारणम् –

**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः - रक्षां धारयामि॥**

## मन्त्रपुष्पम् प्रदक्षिणा –

**श्रीविद्यादिमहामन्त्रमाहात्म्यपरिदर्शक। मन्त्रसारज्ञ भगवन् मन्त्रपुष्पं ददामि ते॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – मन्त्रपुष्पं समर्पयामि॥**

## प्रदक्षिणा –

**प्रदक्षिणीकृताशेष भारताजिर शङ्कर। प्रदक्षिणं करोमि त्वां प्रसन्नवदनाम्बुज॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः – अनन्तकोटि प्रदक्षिणनमस्कारान् समर्पयामि॥**

## प्रसन्नार्घ्यम् –

**प्रसन्नहृदयाम्भोज प्रपन्नार्तिप्रभञ्जन। प्रकृष्टज्ञानमाहात्म्य प्रसन्नार्घ्यं ददामि ते॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः - इदमर्घ्यमिदमर्घ्यमिदमर्घ्यम्॥**

## प्रार्थना –

**अनेकजन्मसम्प्राप्त कर्मबन्धविदाहिने। आत्मज्ञानप्रदानेन तस्मै श्रीगुरवे नमः॥**
**ज्ञानं देहि यशो देहि विवेकं बुद्धिमेव च। वैराग्यं च शिवां विद्यां निर्मलां भक्तिमन्वहम्॥**
**अद्वैतसारसर्वस्व संग्रहोत्सुकमानस। शिष्योपदेशप्रणयिन् प्रार्थनां ते समर्पये॥**
**श्रीशङ्करभगवत्पादाचार्यस्वामिने नमः - प्रार्थयामि॥**

## पुनः पूजा –

**छत्रं धारयामि - चामरं वीजयामि - गीतं श्रावयामि - वाद्यं घोषयामि - नृत्तं दर्शयामि - आन्दोलिकामारोपयामि - अश्वमारोपयामि - गजमारोपयामि - रथमारोपयामि - ध्वजारोहणं समर्पयामि॥**

**श्रीपूर्णातटिनीतरङ्गपटली पूरोदरोदित्वर स्फीतांभःकण शीतलानिल परिस्पन्दाधिकानन्दित।**
**कालट्याख्य पुरोल्लसच्छिवगुरुस्थान प्रदीपाङ्कुर श्रीमच्छङ्करदेशिकोत्तम विभो ऋग्वेदमाकर्णय॥**
**श्रीमत्कैलासाचलकृताधिवास श्रीपतिप्रमुखसुरवर प्रार्थित भूलोकवास ऋग्वेदप्रिय ऋग्वेदमवधारय।**
[इति घण्टानादं कृत्वा]

**कल्यातङ्क निरङ्कुशस्य जगतः कल्याणसन्दायक ब्रह्मेन्द्रादि समस्तदेव निकुरुम्भाभ्यर्थना साधक।**
**श्रीमत्कालटिपुण्यभूपरिसर प्राप्तावतारोज्ज्वल विद्याराजकुलाब्धिचन्दिर यजुर्वेदं त्वमाकर्णय॥**
**समाश्रित वृषाचलेश्वर स्वयम्भूलिङ्ग समादृत स्वाश्रित भक्तजन प्रार्थनापूरण व्यतिषङ्ग यजुर्वेदप्रिय**
**यजुर्वेदमवधारय।** [इति घण्टानादं कृत्वा]

**आर्याम्बा मुखपङ्कजार्क शिवगुर्वानन्दसन्दोहन स्वाचार्याधिगताखिल श्रुतितते सच्छास्त्रपारङ्गत।**
**ग्राहग्रासमिषात् स्वमातृकृतसन्यासाभ्यनुज्ञानुग श्रीमच्छङ्कर सामवेदमधुना सानन्दमाकर्णय॥**
**सफलीकृतार्याम्बाशिवगुरु मनोरथ विशदीकृतात्मविद्याविचार विकलीकृतमन्मथ सामवेदप्रिय**
**सामवेदमवधारय।** [इति घण्टानादं कृत्वा]

**श्रीगोविन्दमुखोद्गत श्रुतिशिरोवाक्योपदेशादृत श्रीविश्वेश्वर दर्शनोत्सुक विभो काशीनिवासप्रिय।**
**सम्सारार्तसनन्दनादिकृतिनां सन्यासदीक्षागुरो सामोदं त्वमथर्ववेदमधुना स्वामिन् समाकर्णय॥**
[इति घण्टानादं कृत्वा]

**गीतावाक्य ततेर्दशोपनिषदां श्रीव्याससूत्रावलेः प्रस्थानत्रितयस्य निस्तुल महाभाष्यप्रणेतः प्रभो।**
**वाराणस्युपसन्न शिष्यजनताभाष्योपदेशोत्सुक स्वाधीनीकृत सर्वशास्त्रवितते शास्त्रं समाकर्णय॥**
**निजपादाम्सु परिपावित कालटीक्षेत्र निजपुण्यावतार परिष्कृतात्रेयगोत्र शास्त्रार्थप्रिय शास्त्रमवधारय।**
**श्री अथातो दर्शपूर्णमासौ व्याख्यास्यामः। प्रातरग्निहोत्रं हुत्वा अन्यमाहवनीयं प्रणीय अग्नीनन्वादधाति॥**

**वृद्धब्राह्मण बादरायणकृतप्रश्नोत्तरात्युत्सुक सूत्रौघ स्वरसार्थ वर्णन सुसंतुष्यन्मुनिश्लाघित।**
**व्यासाज्ञावशतः स्वभाष्य विशदीकार प्रचारोद्यत शुद्धाद्वैतमतप्रसारणपटो प्रीत्या पुराणं शृणु॥**
**स्वमहिम सम्प्रापित सौवर्णवर्ष समुत्पादित दीनतरद्विजसतीहर्ष पुराणपठनप्रिय पुराणमवधारय।**
**परित्राणाय साधूनां विनाशाय च दुष्कृतां। धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥**

## क्षमाप्रार्थना –

**आवाहनं न जानामि न जानामि विसर्जनम्। पुजाविधिं न जानामि क्षमस्व गुरुसत्तम॥**

**अन्यथा शरणं नास्ति त्वमेव शरणं मम। तस्मात्कारुण्यभावेन रक्ष रक्ष जगद्गुरो॥**

**अपराधसहस्राणि क्रियन्तेऽहर्निशं मया। दासोऽयमिति मां मत्वा क्षमस्व गुरुपुङ्गव॥**

**कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतेः स्वभावात्।**

**करोमि यद्यत्सकलं परस्मै श्रीशङ्करायेति समर्पयामि॥**

**हृत्पद्मकर्णिकामध्यं स्वशिष्यैः सह शङ्कर। प्रविश त्वं महादेव सर्वलोकैकनायक॥**

[इति निर्माल्यमाघ्राय स्तोत्रादिकं पठेत्]

**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां, ध्यायन्तु भूतानि शिवं मिथो धिया।**

**मनश्च भद्रं भजतादधोक्षजे, आवेश्यतां नो मतिरप्यहैतुकी॥**

**स्वस्ति: प्रजाभ्यः परिपालयन्तां, न्यायेन मार्गेण महीं महीशाः।**

**गो ब्राह्मणेभ्यः शुभमस्तु नित्यं, लोकाः समस्ताः सुखिनो भवन्तु॥**

**काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी। देशोऽयं क्षोभरहितः ब्राह्मणाः सन्तु निर्भयाः॥**

**धर्मस्य जयोऽस्तु॥ अधर्मस्य नाशोऽस्तु॥ प्राणिषु सद्भावनाऽस्तु॥**

**विश्वस्य कल्याणमस्तु॥ गोमातुः जयोऽस्तु॥ गोहत्यायाः निरोधोऽस्तु॥**

**धर्मस्य हि जयो भूयाद् अधर्मस्य पराजयः। भूयात्प्राणिषु सद्भावो विश्वस्यास्य शिवं सदा॥**

**गवां वै मन्त्रमूर्त्तीणां पुनर्भूयाज्जयो जयः। कलङ्को गोवधोद्भूतः प्रभो राष्ट्रादपैतु नः॥**

**भूयाद्भारतमस्माकमखण्डं धर्ममण्डितम्। स्वामिनां करपात्राणां वर्द्धतां धर्मसंहतिः॥**

**शम्भो हरहरेत्युच्चैर्महादेवेति गर्जनम्। सद्धर्मवर्त्मपान्थानामस्माकं राजतां भुवि॥**

**शुभं भूयाद्धि विश्वस्य प्राणिनः सन्तु निर्भयाः। धर्मवन्तश्च मोदन्तां ब्रह्मज्योतिः समेधताम्॥**

**यस्य स्मृत्या च नामोक्त्या तपः पूजा कृयादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्॥**

**मन्त्रहीनं क्रियाहीनं भक्तिहीनं जगद्गुरो। यत्पूजितं मया देव परिपूर्णं तदस्तु मे॥**

**अनेन मया कृत पूजया श्रीशङ्करभगवत्पादाचार्यः प्रीयताम्॥**

**मध्ये मन्त्र तन्त्र स्वर वर्ण ध्यान नियम न्यूनातिरिक्त लोपदोष प्रायश्चित्तार्थं नामत्रयजपमहं करिष्ये॥**

**श्री अच्युताय नमः। श्री अनन्ताय नमः। श्री गोविन्दाय नमः।** [त्रिः-३]

**श्री अच्युतानन्तगोविन्देभ्यो नमो नमः॥**

**प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै। यानि तेषामशेषाणां कृष्णानुस्मरणं परम्॥**

**श्रीकृष्ण-कृष्ण-कृष्ण**

**श्री हर श्री हर श्री हर**

**॥ श्रीमहात्रिपुरसुन्दरी चरणारविन्दार्पणमस्तु ॥**



**धर्म की जय हो। अधर्म का नाश हो।**

**प्राणियों में सद्भावना हो। विश्व का कल्याण हो।**

**गोमाता की जय हो। गोहत्या बंद हो।**

**भारत अखंड हो। भारत अखंड हो।**

**श्रीजगन्नाथ महाप्रभु की जय हो। भगवती सुभद्रादेवी की जय हो। श्रीबलभद्र महाप्रभु की जय हो।**

**श्रीमज्जद्गुरु शिवावतार आद्य शङ्कराचार्य भगवान् की जय हो।**

**सर्वभूतहृदय अभिनवशङ्कर धर्मसम्राट स्वामी श्रीकरपात्रीजी महाराज की जय हो।**

**श्रीमज्जद्गुरु शङ्कराचार्य पुरीपीठाधीश्वर स्वामी श्रीनिश्चलानन्दसरस्वतीजी महाराज की जय हो।**

**नमः पार्वती पतये हर हर महादेव॥**

